पतनप्रतिबन्धकत्वसमवायित्वादौ। एवमन्यस्मिन्नपि वह्नौ पदार्थे आ-
ग्रति विप्रतिपत्तय लक्षणानि कल्पितानि तदास्तामेकत्र विस्त-
राभिनिवेशः। किञ्च किं तत्साक्षात्कारित्वं सविशेषार्थप्रकाशत्वमिति
चेन्न सविशेषत्वस्योपलक्षणत्वेऽनुमानादिव्याप्तेः विशेषणत्वे च यदि
विशेषपर्य्यवसायां विश्रान्तिस्तदाशेषविशेषस्य बोधे प्रत्यक्षलक्षण
क्षीणत्वेनाभूतमप्रत्यक्षत्वापातः यद्यविश्रान्तिस्तदा तादृशस्यैव व्याप्ति
ग्रहादनुमानादपि तादृशसिद्धिरिति साक्षात्कारित्वापत्तिः। अथा-
नुगमात्तत्र न तदनुना तर्हि तदनुगतप्रतीत्याद्यनुपपत्तिः व्यक्तेरनुमा-
नादसिद्ध्यापत्तिश्च। यथाहि व्यक्तिं विना सामान्यस्य तथा तावत् तं
विशेषं विना व्यक्तेरप्यनुपपत्तावविशेषात् यदि च प्रतीत्यपर्य्यवसाना
भावात्प्रत्यक्षधर्म्मतया नानन्तविशेषसिद्धिरिति मन्यसे तदा प्रतीत्य-
पर्य्यवसानात्सद्भिः साक्षात्प्रकाशः स्यात्। अप्रतिपद्यमानानन्तविशेष
प्रकाशकस्यनैकाकिसाक्षात्त्वनामकविशेषकल्पनैवाल्पत्वात् श्रेयसि-
तरा साक्षात्त्वव्यवहारान्यथानुपपत्तेः कल्पनावीजस्य तावतापि चरि-
तार्थत्वादिति चेत् तत्कल्पनादिनातएव विस्तरस्तत्र वक्ष्यते विशेषस्य
यदि व्यवच्छेदस्तदा निर्विकल्पकाव्याप्तिः। यदि च विश्वव्यावृत्तस्वरूप
प्रकाशात् सोऽपि तथा तदा दूरे सामान्यप्रत्यक्षस्याप्रत्यक्षत्वापातः तत्र
जगद्वैलक्षण्यप्रकाशे संशयाद्यनुपपत्तेः यदि तत्रापि प्रतिपक्षादिव्यव-
च्छेदमात्रप्रकाशादिशेषप्रकाशत्वमेव तदानुमित्यादिव्याप्तिः। अथ
इन्द्रियकरणकानुभूतित्वं तत्र साक्षात्कारिणीकरणस्यैवेन्द्रियत्वेना
न्योन्याश्रयत्वापत्तेरिति केचित् तन्न अज्ञातप्रमाकरणत्वस्य भावत्व
विशेषितस्येन्द्रियनिरुक्तेः सम्भवात् विना कार्य्यगतविशेषसिद्धिं किं
प्रति करणत्वमेव ज्ञेयमिति तु आद्यः साधीयान्। एतेन ज्ञातता
काचिद्विलक्षणा तज्जनकत्वं ज्ञानस्य साक्षात्त्वमिति निरस्तम् एक
रूप्याव्यवस्थितौ कारणत्वानवधारणात्। नच ज्ञाततावैलक्षण्यान्यथा
नुपपत्तेरेव तत्सिद्धिः कारणान्तरवैलक्षण्यादेव तदुपपत्तेः। नापि

न्द्रियजनितत्वमतिप्रसङ्गात् । स्मरणेयजत्वे च स्वार्थत्वाख्यानस्यानुगमात् पूर्व्वदोषानिवृत्तेश्च । अथ येन प्रमिते सति न प्रमित्सा पुनर्भवति तज्ज्ञानं साक्षात्कारीति तन्न प्रत्यक्षावगतेऽपीष्टे तन्नयादौ प्रमित्सा-दर्शनात् । अथ यदनन्तरं न विजातीयप्रमित्सा तद्भाव स्यात्वं तन्न तत्साक्षात्त्वानवगतौ तद्विजातीयानवगतेः अदिसम्प्रत्यनुमादिविषयार्थां प्रत्यक्षयितुमनिच्छेश्च । प्रत्यक्षावगतेऽपि दहने हस्ताभ्योक्तस्तवकसन्देहे धूमदर्शनेन वह्नेरनुमीयमानत्वादित्यप्येके । अज्ञायमानासाधारण कारणकानुभवत्वं कारणविशेषणीकृतभावत्वं वा साक्षात्कारित्वमिति चेन्न दीर्घादिप्रत्यक्षाव्यापनात् तत्रावधिप्रभृतेः प्रतीयमानस्यापेक्ष-णात् । नावधिस्तत्र ज्ञायमान स्तथा अवधिज्ञानं तु स्यात् अतीता-दाववधौ तथाप्रत्ययादिति चेत् तुल्यं लिङ्गे धूमादावपि धूमदर्शना त्तत्राग्निरासीदिति पश्चादप्यनुमानात् ज्ञानविशेषणतया ज्ञेयहेतुता तुल्यैवेति । असाधारणकारणगिरा करणमभिमतमिति चेन्न अनु-मितभाविलिङ्गकभाविलिङ्गानुमितावसतो लिङ्गस्य करणत्वासम्भ-वेन ज्ञायमानकरणकत्वाभावात् । लिङ्गज्ञानं तावत्करणं तच्च स्व प्रकाशवादिनो मम ज्ञायमानमेव तत्रेति चेन्न तस्यापि ज्ञायमानतया करणकोटिप्रवेशे प्रमाणाभावात् उक्तप्रत्ययानां तथात्वाभावात् । अन्यथासिद्धस्यापि ज्ञायमानत्वस्यावर्ज्जने चक्षुरात्यनुमित्यनन्तरं दै-वोपजातघटादिप्रत्यक्षाव्यापनात् नियमेनेति चेन्न विधौ वैयर्थ्यात् । नियमेनेति निषेधस्य विशेषणे दैवागतेन्द्रियज्ञानानन्तरजप्रत्यक्षसम्भ वादसिद्धिः । विधौ कारणत्वप्रविष्टस्वार्थे नियमो निरुच्यतइति चेन्न तथापि वैयर्थ्यादेव । अन्यथातिप्रसक्तेर्वैयर्थ्यमिति चेन्न तथाप्यति प्रसक्तेरेव नहि रसादिसाक्षात्कारे रूपादिर्हेतुः । अन्यथासिद्धेर्नेति चेन्न तुल्यत्वात् । किञ्च यत्र निषेधः तद्गतमैकरूप्यं निरूप्यमन्यथा किमादाय नियमो निरूप्य इति कार्य्यगतैकरूप्यमनभिधाय न निस्तारः । विनापि च नियमपदप्रवेशं कार्य्यगतैकरूप्यमनिरूप्य न

निश्चाययत् ज्ञायमानं नाम करणमिति चेत् यदि कार्य्यव्यक्तिमभि-
सन्धाय तदा तत्पूर्वं प्रतीतानां तथाकरणत्वं दुरवधारणं ततस्तज्जा-
तीये तज्जातीयव्यभिचारप्रतिसन्धानेऽवश्यं पतनीयमिति । स्वाव्यव-
हितार्थप्रकाशत्वं तथात्वं तर्हि किमपेक्ष्य व्यवधानं किं वेति वाच्यम्
इन्द्रियमपेक्ष्य तदसन्निकर्षश्च तदिति चेत् तर्हीन्द्रियसन्निकृष्टप्रकाशत्व-
मिति कुटिलिकार्थः स चानुपपन्नः सविशेषणगोचरानुमानव्याप्तेः ।
ज्ञानाजन्यज्ञानत्वं तदिति चेन्न सविकल्पकविशेषाव्यापनात् । एतेन
विषयान्तरज्ञानाजन्यत्वं तदिति प्रत्युक्तं सविकल्पकस्याधिकव्यवच्छेद
रूपविषयत्वात् तदवच्छिन्नज्ञानजन्यत्वात् स्वविषयानन्तर्गतार्थज्ञानाजन्य-
धीत्वं तत् । नच सप्रतियोगिकार्थप्रत्यक्षाव्याप्तिः प्रतियोगिनोऽपि वि-
शिष्टार्थप्रविष्टस्य तत्ताया इव प्रत्यभिज्ञायां प्रत्यक्षविषयत्वोपगमात् ।
स्वप्रतियोगित्वेन विशेषणादेति चेन्न स्वपदेनैव द्वारीकृतत्वात् कार्य्य
व्यक्तावजन्यतायाः दुरवधारणत्वाच्च । तज्जातीये तज्जातीयव्यभिचार
शास्त्रग्रहे च कार्य्यैकजात्ये पूर्व्ववत्पतनमिति स्वकालावच्छिन्नार्थबोध-
कत्वं साक्षात्त्वमित्यपि न स्वार्थाविवेचनात् । कथञ्चानुमानादिव्यव-
च्छेदः तच्च व्याप्त्यादिप्रविष्टकालनियतार्थत्वं यद्यपि चन्द्रोदयसमुद्र
वृद्ध्यादौ स्वकालार्थत्वं तथापि व्याप्तिप्रविष्टत्वेन तादृशत्वस्य प्रयोजि-
केति चेन्न कथमप्यस्तु तथापि स्वकालावच्छिन्नार्थत्वस्य सम्भवात् । नच
यज्जातीयमेवमेवेति विशेषः साजात्यस्य वैलक्षण्यस्याग्रतः सिद्धौ
किमनेन नच तदपीति वक्ष्यते । व्याप्त्यादिकमन्तरेणेति चेन्न तस्यैव
समर्थत्वेन स्वकालकथावैयर्थ्यात् । यथा च न तदपि तथा वक्ष्यते ।
यत्तु कश्चिदाह स्वप्रकाशनिषेधात् स्वकालावच्छिन्नार्थप्रकाशत्वासम्भ-
वइति तदप्ययुक्तं वस्तुतो यः स्वकालस्तस्य विवक्षितत्वात् । वर्त्तमान
प्रकाशकत्वेति निरुक्तिपर्य्यवसानात् वर्त्तमानार्थस्य च सर्व्वनिर्व्वच-
नीयत्वात् । तथाचोक्तम् "सम्बद्धं वर्त्तमानञ्च गृह्यते चक्षुरादिना ।"
तस्मादस्मदुक्तमेव युक्तम् ।

योढासन्निकर्षेतराप्रयुक्तविषयनियमं ज्ञानं तथेति चेन्न दोषवशाज्जातसाक्षाद्बोधे तदसम्भवात्। प्रमासाक्षात्कारत्वावच्छेद्येति चेन्न साक्षात्त्वेन प्रमेतरयोरविशिष्टतया साक्षात्त्वस्य साधारणस्यैव निर्वक्तव्यत्वात्। अनिरुक्तमनुद्धिमते योढासन्निकर्षस्य प्रत्येकमिति विकल्पानुपपत्तेः साक्षाद्धीः स्वरूपधीः स्वेन रूपेण वस्तुनो भानमिति चेन्न अनुमानादिव्यापनात्। अनुमानादौ लिङ्गाद्यपेक्षत्वात्तदवच्छिन्नकालसम्बद्धबोधत्वं न तत्रास्तीति चेन्न व्यभिचारात् यत्र लिङ्गादि भाव्यादिबोधकं तत्र तत्कालत्वाव्यभिचारात्। एतेन यदि न लिङ्गकालावच्छिन्नव्यापकप्रतिभासोऽनुमा तदा कूटव्याप्यानुमितस्य व्यापकस्य दैवत्वमात् सत्यव्याप्यव्यापकान्तरवतः प्राप्तौ व्याप्तिकालावच्छिन्नव्यापकप्रमात्रा तावत्यंशे प्रमात्वं प्रमाविशेषान्तर्भावान्निर्वाच्यमापद्येतेति निरस्तम्। भूतादिव्यापकानुमाने व्याप्यकालत्वासम्भवात् तथापि चाभ्राद्विलदर्शमाने प्रमात्वापातदुष्परिहरत्वस्योक्तत्वात्। अनुपस्थितप्रतीतिः साक्षाद्धीरिति चेन्न विशिष्टप्रविष्टविशेष्यप्रत्यक्षाव्यापनात्। करणानुपस्थितत्वं विवक्षितमिति चेन्न परकरणोपस्थिताव्यापनात्। स्वकरणोपस्थितत्वस्य च स्वपदकुक्षिनिक्षिप्तत्वात्। व्याप्त्युपस्थितत्वादीनां व्यतिरेकस्य यत्र समुच्चयः सा धीः साक्षाद्धीरिति चेन्न व्याप्त्यादि प्रत्यक्षाव्यापनात् असिद्धत्वाच्च पर्वतोऽग्निमानित्येव प्रतिज्ञानात् शब्देन च व्याप्तिप्रतिपादनात् शाब्दादिमितेश्च प्रत्यक्षत्वापादनात्। अव्यवहितधीत्वं साक्षाद्धीत्वमिति चेन्न व्यवधानविकल्पानुपपत्तेः। यदि मध्यविशेषान्तरव्यवस्थितिर्व्यवधिः तदानीमप्रत्यक्षविभुधियां साक्षात्त्वापत्तिः। अथ व्यापकज्ञानपूर्वकत्वं व्यवधानं तदा महत्त्वाद्यप्रत्यक्षतापत्तिरिति विशिष्टवैशिष्ट्यं व्यवधानमिति चेन्न धूमविशिष्टे वह्निवैशिष्ट्यमिति स्वरूपस्थितौ तथात्वे कार्यकारणभावविरोधः प्रतीतौ धूमवैशिष्ट्यस्य धर्मिविशेषणत्वे हेतोरंशतः स्वरूक्तिः। साध्यविशेषणत्वे व्याप्तिग्राहिप्रत्यक्षे व्यवधानाभावात् न साक्षात्त्वं स्यात्। अथ

ज्ञानस्य जातिभेदः कश्चित्साक्षात्त्वं तस्यानुभवत्वेन परापरभावानुपपत्तिः स्मृतेरपि साक्षात्कारित्वादिति केचित् तन्न स्मृतेस्तथात्वानभ्युपगमात् स्वप्नस्य तावत् स्मृतित्वासिद्धेः सिद्धौ वा तत्र साक्षात्त्वारोपोपगमात् भावनाबलजस्य च कचिद्दासोक्तादिधर्म्मिकक्रियाद्याश्रयधर्म्मारोपत्वं शुक्तिरजतभ्रमवत् निमीलितनयनादेश्च स्वप्नवदेव गतिरवगन्तव्येति। इदन्तु स्यात् परमाण्वादिबुद्धावनुव्यवसीयमानायां परमाणुप्रतीत्यंशेऽपि साक्षात्त्वमनुभूयत इत्यत्र न नः सम्प्रतिपत्तिः। अन्यथा लिङ्गबुद्धिसाक्षात्कारया प्रत्यासत्त्या वह्निरपि मानसप्रत्यक्ष एव न लैङ्गिक इति परैः सुवचत्वात्। एवं प्रत्यभिज्ञायां पूर्वदेशकालस्थितिमस्य पश्यामीति कस्यानुभवो यद्बलात्तथाभ्युपेयं तस्मात्प्रतीति कल्पोऽयम्। यदि च साक्षात्त्वं जातिरध्यक्षमानिका तदा प्रतीता कस्याश्चिदध्यक्षानध्यक्षविवादो न स्यात् नहि घटादिप्रत्यक्षत्वे विवदन्ते। क्वचिदस्फुटत्वाद्विवाद इति चेत् नैवम्। निरंशे वस्तुनि कः स्फुटावभासः यदेकार्थसमवायिभिर्भूयोभिः सहोपलम्भः स ज्ञानत्वादिवत्साक्षात्त्वेऽपि तज्जातिज्ञानादित्वेन विवादः साक्षात्त्वे त्विति विशेषो वाच्यः। दर्शनकृतो हि विवादो न साक्षात्त्वस्य वाच्याभावात् किन्तु तत्त्वाभिमानादेव प्रत्यक्षार्थधर्म्मिकायाश्चानुमायां साक्षात्त्वपरोक्षत्व सङ्करो दुर्वारः। परोक्षत्वं न जातिः किन्तु साक्षात्त्वमेव तथा केवलन्तु साक्षात्त्वाभावः परोक्षत्वमिति चेन्न स्वस्यार्थस्य विनिगमकत्वत्वापत्तेः। सार्वज्ञमनुमन्यमानस्य च मते दृष्टलिङ्गादेरीश्वरस्य लिङ्गादिबुद्धावपरोक्षत्वेनापि विरोधः लिङ्गादिधीजन्यत्वमनुमितित्वादौ प्रयोजकमिति चेत् साक्षात्त्वेऽपि तदीन्द्रियसन्निकर्षादिजत्वमिति साक्षादपि सा न स्यात्। व्यञ्जकोपाधिनियता च जातिरिष्येत न च तदत्र रूपप्रकारत्वाभावात्। नच व्यञ्जकानियमानभ्युपगत्या न तदवोपगम्यमिति वाच्यं किं मया दृष्टं तथा किं वा केनचिद्बोधितमिति संशयानुपपत्तेः। प्रसूतायां कस्येताशायां तद्द्वौ लभ्यते मनसा

ज्ञानरूपया प्रत्यासत्त्या प्रत्यक्षीक्रियमाणायां साक्षात्त्वापत्ते विना व्यञ्जकाभावं कथं स्यात्। अथ धर्म्मस्य साक्षात्त्वमिति स्वप्रकाशत्वादे निरक्तं तथाप्यबाधितसाक्षात्त्वबुद्धिव्यवहारबलादन्यतः पदार्थान्तर अपि साक्षात्त्वमननुमत्य न निस्तारोऽस्ति भ्रान्तेरप्यभ्रान्तिपूर्वकत्वा- दिति चेन्न तस्यापि साक्षात्त्वे क्वचित्तद्विवादो न स्यादित्यादिदोष साम्यात्। अनुमानादिवेद्यत्वे च लिङ्गाद्यनुपपत्तेः कथं व्याप्त्यादिग्रह इत्यादिदुरन्तपरम्परैव स्यात् सप्तपदार्थीनियमसाधनानि च न कथं परिपन्थीनि स्युरिति। लिङ्गादिज्ञानाभावसमुदायवती धीः साक्षा- दिति चेन्न परोक्षविषयसंशयादावतिव्याप्तेः तादृशी प्रमा तथेति चेन्न प्रत्यक्षभ्रमाव्याप्तेः। अनुमानादिव्यवच्छेद्यतत्तदसाधारणकारणाज- निता धीः साक्षादिति चेन्न एवं हि प्रत्यक्षतत्तदपरव्यतिरिक्ता धी रनुमानादिरिति वैपरीत्यमेव कुतो न स्यादित्यविनिगम्यत्वं स्यात्। तेषु व्यवच्छेद्येष्वेकद्व्यादि परित्याग व्यवच्छेदहेतुभणितत्वेनापि सा- क्षात्त्वतत्र तथानुगतबुद्ध्याद्यन्तरापत्तेः व्यवहारे सति निमित्तानु सरणं ननु निमित्तानुसरणेन व्यवहार इति चेन्न निमित्तस्यात्यन्ता पत्तिदारस्यैव कल्प्यत्वात् तत्तज्जनितत्वाभावोऽपि हि तेनैव रूपेणानुगत व्यवहारप्रत्यया बाधकाभ्यान्नान्येनापि तथात्वे यावत्परिदृष्टव्यक्तिविश्रे- षान्यत्वेन व्यवहारोपपत्तौ गोत्वाद्युच्छेदप्रसङ्गः। तस्मात् “विभिन्नः प्रत्ययोऽन्योऽयं व्यतिरेकसमर्थिनः। नैव चेदपराद्धान्ते निमन्थ्यापोह वादिना।” शब्दानुमानोपमानप्रमितिव्यतिरिक्तत्वे सति प्रमितित्वं प्रत्यक्षलक्षणमभिधाय यः कोपि न क्षमते स प्रष्टव्यः किं प्रत्येक मिदं लक्षणमुत मिलितम्। नाद्यः प्रत्येकं व्यभिचारात्। द्वितीये किं मिलितानां निषेधः उत निषेधानां मिलितत्वम्। नाद्यः प्रत्येकमेव व्यभिचारात् नहि प्रत्येकमनुमित्यादौ मिलिततद्रूपसम्भवः। नापि द्वितीयः मिलिताद्यनुमित्यादिषु निषेधमेलकसम्भवेऽपि प्रत्यक्ष- त्वानभ्युपगमात् न शङ्काभ्रमयोर्यथायथमनुमानिषेधानां अप्रत्यक्षत्वमपि चैका-

अशक्यमिति चेन्न समुदायिभेदेऽपि समुदायस्यानुमित्यादिवदेकतोप-
चारयोगाविशेषाभ्युपगम इति हि वक्ष्यते । असमुदायत्वे सतीत्यपि
विवक्षितमिति चेन्न समुदायत्वविशिष्ट एवांशतः स्वात्मनि वृत्तिविरोध-
भयेनासमुदायत्वस्येष्टत्वेन तादृशि प्रसङ्गो दुर्वारः । ज्ञानस्यैवं
विवक्षितमिति चेन्न विशिष्टस्यापि ज्ञानस्य ज्ञानत्वादेव । एकेति च कि-
मात्यन्तिकाभेदो विवक्षितः उताभिन्नजातीयता उतैकोपाधिमत्ता
उतैकसंख्यायोगिता उत द्व्यादिसंख्यायोगाभावः । आद्ये तद्विशिष्ट-
स्याव्यापकतादोषः ज्ञानात्मनोऽभेदस्य व्याहतत्वात् धर्म्मिणा च
सहाविशेषणे च तस्य धर्म्मत्वं तत्त्वमस्य स्यात् स्वस्यैव स्वधर्म्मत्वानुप-
पत्तेः । आश्रयाभेदोपलक्षणत्वे प्रागुक्तदोषः द्वितीये तदेवाभिन्नजाती-
यत्वं ज्ञायमानमस्तु कथञ्चनान्यथा प्राथम्येन प्रतीयमानत्वात् । न तृतीयः
परोक्षप्रमितित्वस्यानुमित्यादिषु मिलितास्वपि भावात् । नापि
चतुर्थः वैशेषिकपक्षे गुणतया तदभावात् भावे चानुमित्यादिचयवृ-
त्तीनां यथायथमपरभावान्नैकत्वसंख्यासामानाधिकरण्यसम्भवात् ।
मिलितानामप्येकसमुदायापेक्षया तथात्वात् । नापि पञ्चमः वैशे-
षिकमतानुसारेणानुमित्यादिचयेऽपि तदभावस्य तुल्यत्वात् । अतदनु-
सारेण प्रत्यक्षव्यक्तिष्वपि द्व्यादिसंख्यायोगात् तथापि नैकस्यां प्रत्यक्ष-
व्यक्तौ द्व्यादिपरिसमाप्तिः । द्व्यादिसंख्यापरिसमाप्त्यभावश्च तदभाव-
शब्देन विवक्षित इति चेन्न का हि परिसमाप्तिर्यैकस्यां व्यक्तौ नास्ती-
त्युच्यते । तत्रैव वृत्तिर्द्व्यादेः परिसमाप्तिः सैकस्यां व्यक्तौ नास्तीति
चेन्न एवमेकत्वस्यापि न क्वचित्परिसमाप्तिः स्यात् नहि तस्य तत्रैव
वृत्तिरन्यस्मिन्वृत्त्यभावप्रसङ्गात् । अत एकत्वसंख्यावत्यामेव व्यक्तौ
द्व्यादिपरिसमाप्तिरित्यविशेषश्च । एकव्यक्तिगता एकत्वसंख्याव्यक्ति-
र्नान्येति चेन्न सत्तायामप्येवम्भावप्रसङ्गात् अननुगतत्वापत्तेश्च ।
सत्तैकैव जातिरूपा एकत्वन्तु प्रतिव्यक्तिभिन्नं गुणपदार्थ इति चेत् नूनं
वैशेषिकैर्विप्रलब्धोऽसि कथमन्यथा सदेकप्रत्यययोरनुभवव्यवहार-

विशेषणतयाप्यन्नपि कानिचित्कानिचिदसम्बद्धान्यक्षराणि प्रकल्पति । सत्त्वैकत्वयोः परापरत्वानुपपत्तेरेवं स्यादिति चेन्न सामान्यात् जातिपरापरत्वधीव्यवस्यैव च क्वाप्येकन्यूनवृत्तित्वे प्रमाणं स्यात् । न तथेति चेत् घटेऽनवस्थानुमायां न ज्ञातवितथादौ तदंश इत्यनिश्चयवददोषत्वात् मन्यतु मा वासीदेकत्वमनुगतं किमनेनात्र निरूपितेन घटत्वादि यत्र न समाप्यते अभिहिताभावत्रयं चास्ति तत्प्रत्यक्षमिति । नैवम् । अनुमित्यादित्रयेऽपि न घटत्वं परिसमाप्तम् एवं सत्यन्यानि त्रीणि न स्युः । अन्या सा घटत्वव्यक्ति यान्यत्रेति चेन्न घटत्वव्यक्तेः कस्याश्चिदनुमित्यादित्रये समाप्त्यभावात् । काचिदपि घटत्वव्यक्ति यत्र न समाप्यत इति चेन्न अव्यापकत्वात् प्रत्यक्षत्वस्य च घटत्वव्यक्तेश्चावश्यं सामानाधिकरण्यस्य वैशेषिकमतस्थितेन भवताऽभ्युपगम्यत्वात् । अन्यथा प्रत्यक्षव्यक्तय स्तिस्रो न स्युः तदेव भिरभिधीयते यत्र घटत्वं परिसमाप्यते । किञ्च तथापि सत्त्वातिव्यापकतादोषः घटत्वेनावच्छिन्नानुमित्यादिव्यक्तिषु त्वदभिहितमभावत्रयमस्तीति तत्र प्रत्यक्षलक्षणं गतमित्यतिव्याप्तिरुक्ता तद्व्यावर्त्तनाय भवताभिधीयते काचिदपि घटत्वव्यक्तिर्यत्र न समाप्यत इति । नचैवमुक्तो सातिव्याप्तिर्निवर्त्तते तत्राप्युक्तविशेषणस्य विद्यमानत्वात् । कश्चि घटत्वावच्छिन्ने तस्मिन घटव्यक्तिः काचिदपि समाप्यते घटत्वलक्षणैकोपाध्यवच्छिन्ने तस्मिन् घटत्वव्यक्त्यन्तरं भवदप्याश्रयान्तरमादाय वर्त्तते न तु तत्रैव परिसमाप्यते यत्र चोक्तसपाधिभूतं घटत्वं तेषु यदि घटत्वसमाप्तिधर्म्मिषु दृश्यते तदा तदंशनेन तत्र धर्म्मिमात्रे प्रत्यक्षव्यावृत्तिः सिद्ध्येत् न तु घटत्वविशिष्टे धर्म्मिणि तस्मादितिव्यापकं तदवस्थमेव । अभावत्रयस्य घटत्वोपाध्यवच्छेदेन समुदिततानुपगतवत्तिविशिष्टे धर्म्मिणि वर्त्तते न त्वविशिष्टे प्रत्येकमभावत्रयावस्थानस्य तेषु वक्तुमशक्यत्वात् । अथ मन्यसे तादृशस्य विशिष्टस्य प्रमितित्वेनैव व्यवच्छेदः तद्वाभावत्रयवत् घटविशे-

यथासम्भवकोटावन्तर्भाव्य तासु धर्मिव्यक्तिषु प्रमितित्वं वर्त्तते किन्तु तेषां धर्मिणां स्वरूपमात्रे उक्ताभाववत्त्वं प्रमितित्वं चेत्तद्याप्यस्ति तत्र-त्यज्ञप्तिमिति चेत् ब्रूमहे। न भवतापि भिन्नधर्मावच्छिन्नस्यैव धर्मिणः प्रमितित्वमभाववत्त्वस्य स्वव्यावर्त्यमभ्युपगन्तव्यम् । तथाहि यदि प्रमि-तित्वस्य कादाचित्कत्वे नियामकं नेष्यते तदा सर्वा प्रमितिः स्यात् न वा काचिदपि । "सर्वं च सत्तासत्ता वा नियमेऽन्यानपेक्षया । निया-मकाद्धि भावानां कादाचित्कत्वस्य सम्भवः ।" तन्नियामकमात्रं विशे-षणीभूतं वा वक्तव्यम् उपलक्षणीभूतं वा । आद्ये यदेव प्रमितित्वस्या-वच्छेदकं तदेव यद्यभाववत्त्वस्यापि तदा भित्त्यावच्छिन्नेऽनुमित्यादाव-भाववत्त्वस्य दर्शितत्वात्तत्र च प्रमितित्वेनापि भित्त्यावच्छिन्ने भवितव्य-मिति प्रमितित्वस्य तदवच्छेदः । अथान्यावच्छिन्ने प्रमितित्वमन्यधर्मा-वच्छिन्नं चाभाववत्त्वमन्यथा तदा नास्ति तत्त्वतोऽपि प्रमितित्वस्यैक-धर्मविशिष्टाश्रयत्वं तत्तद्गमेकाश्रयत्वे विशिष्टे धर्मिण्याश्रितो धर्म्या-श्रित एवेति सत्त्वा च प्रमितित्वस्याभाववत्त्वसमानाश्रयत्वेऽनुमित्यादि-ष्वपि प्रसङ्गस्तदवस्थः । नापि द्वितीयः उपलक्षणीभूतेन केनचिद्ध-र्मेण योऽसावुपलक्षितो धर्मी स एव खलु भित्तिविशिष्टोऽपि विशिष्ट-स्तोऽपि यावद्विशेष्यवस्तुनो विशेष्यवस्थावाचकत्वात् । यथा दण्डेऽपि पुरुषः पुरुष एव एवं सत्युपलक्षितादनन्यभूते भित्तिविशिष्टेऽप्यनु-मित्यादौ प्रमितित्वमाश्रितं नियामकेनोपलक्षणेनोपलक्ष्याभेदव्यव-स्थिततया तस्याप्यवच्छिन्नत्वात् । तथाचातिव्याप्तिर्वज्रलेपायिता तथा-प्युपलक्षकेण भित्तिविशिष्टतया नोपलक्षितोऽसौ धर्मी किन्तु स्वरूपे-णेति चेन्न उत्पत्तेश्च यदेव तदुपलक्षितं तदेव विशिष्टमपि तथापि विशि-ष्टेन रूपेण नावच्छिन्नोपलक्षितमिति चेत् किमुपलक्षि अविशिष्टेनापि तन्नो-पलक्षितमेव अन्यथा प्रकृतेऽपि वैयधिकरण्यापत्तिः । तदास्तामुक्त सत् प्रसङ्गवचनविलसितेनेति । तदेवं लक्षणान्तरेऽपि प्रतिपादितोऽयं दू-षणसमूहः स्वयमूहनीयः । "एतदेव परान्प्रति भट्टैरिदमुदाहृतम् ।

लक्षणस्याभिधानन्तु केनांशेनोपयुज्यते ।" अन्याभिप्रायोक्तमपि हि तत्सामान्यतोऽप्युपपद्यमानमेवेति ।

अनुमानमपि किमुच्यते । व्याप्यपक्षे लिङ्गपरामर्शोऽनुमानमिति चेत् किं लिङ्गत्वं धूमस्य पक्षधर्म्मत्वमिति चेन्न संभवस्तोमप्रत्यक्षत्वे तत्र हस्त्यापि व्यापकं तत्परामर्शेऽतिप्रसङ्गात् अत एव न तस्य वर्त्तमान स्यातत्कालेऽप्युपलक्षणत्वात् विशेषणत्वेनानुमाय व्यापकं धर्म्मिणा नाश्ववदप्रत्यक्षव्यापत्तेः पक्षधर्म्मो हेतोः पक्षांशे विशेष्ये साध्यसिद्धिरीदृशस्य वैयधिकरण्यमिष्टमेवेत्यतो नैवमिति चेन्न पक्षमादाय वैयधिकरण्ये नियतसामानाधिकरण्यलक्षणव्याप्तिलोपापत्तेः । तथापि विशेष्यमादाय साध्येवेति चेन्न साध्यविशेषसिद्धिरपि यत्र व्याप्तिग्रहायत्तं सामान्यं तत्र सामान्यप्रतीत्यपर्य्यवसानप्रसङ्गादेवेति । सामान्यविशेषसिद्ध्यनुपयोगिनी पक्षधर्म्मता त्वदिष्टा केवलं सिद्धसाधनपरिहारायानुमितिकारणत्वेनेष्टव्या । सिद्धसाधनञ्च न स्वार्थानुमाने दोष इति नानुमितिमात्रहेतुनिवेशिनी सा । मोक्षमार्गेऽपि "आगमेनानुमानेन ध्यानात्यवलक्षणेन च । श्रेयात्मनि प्रमाणानां संप्लवः स्वार्थमिष्यत इति ।" एतेन संशययोग्यतापि निरस्ता । व्याप्यत्वमिति चेत् किं वस्तुगत्या व्याप्यस्वरूपेण परामर्शोऽनुमानं व्याप्यतया वा । नाद्यः अगृहीतव्याप्तेरपि धूमादिपरामर्शस्यानुमानत्वप्रसङ्गात् । नापि द्वितीयः व्याप्त्यग्रहेऽखिलः प्रमाणस्यानुमानत्वप्रसङ्गात् तस्यापि व्याप्यताहितया अवच्छेदकत्वात् । अत एव द्वितीयतृतीयविशेषणे अपि निरस्ते धारावाहिनि तत्राप्यापत्तेः । गृहीतव्याप्तिना च युगपदुभयग्रहणे द्वावेतौ व्याप्यव्यापकाविति परामर्शस्यानुमानत्वप्रसङ्गात् । नच तदनुमानमेव असन्दिग्धतया पक्षत्वाभावेन तद्धर्म्मस्य हेतोः सिद्धसाधनवद् पक्षधर्म्मत्वात् । स्वार्थानुमाने नायं दोष इति चेन्न प्रत्यक्षलक्षणोपपत्त्या साक्षात्त्वासाक्षात्त्वविरोधापत्तेः । अव्यापकविषयत्वे सतीति चेन्न व्याप्यविषयत्वाभावप्रसङ्गात् । व्याप्यत्वं हि सत्प्रतियोगिकग्रहणं

तथा चैतस्य व्याप्यमिदमिति गृह्यते तथा च सति व्यापकस्यापि विशे-
षणस्य ग्रहणमवश्यं वक्तव्यम् अन्यथा विशिष्टग्रहणस्य वक्तुमशक्य-
त्वात् विशेषणीभूतव्यापकाविषयत्वे सतीति चेन्न अग्निधूमौ व्याप्ताविन्या-
प्तोपदेशात्पूर्व्वं भूयो गृहीतवह्निधूमस्यापि पर्व्वतस्य वह्निधूमाग्रहणकाले
विमर्शवशाद्वा जायमानव्याप्तिग्रहणस्य व्याप्यपरामर्शेऽनुमानं स्यात्
न परामर्शः प्रत्ययमात्रं येन प्रथमग्रहणे प्रसङ्गः स्यात्। किन्नाम
प्रत्यभिज्ञानमिति चेन्न विचारादाप्तोपदेशाद्वा प्रतीत्य व्याप्तिं पुनरा-
प्तोपदिष्टाद्विचारान्तराद्वा येव मया व्याप्तिर्गृहीता सैवेयमिति प्रत्य-
भिजानतः व्याप्तिज्ञानमनुमानं स्यात्। विशेषतो व्याप्यविषयत्वे सतीति
चेन्न अव्यापकत्वप्रसङ्गात्। एकव्यक्तिविषयत्वस्य व्यक्त्यन्तरेऽसम्भ-
वात् सामान्यतो व्यक्तिविषयत्वस्य चातिप्रसञ्जकत्वात्। किञ्च धूमव-
त्त्वादेर्यदा कदाचिदग्निमत्त्वं वा प्रतीयते तदानींवाग्निमत्त्वं पर्व्वतादेः
साध्यः तदानीमिवान्यदाप्यनर्थिप्रवृत्तेरपि प्रसङ्गात्। न हि तस्य
तदानीमनभिमततया व्याप्तत्वानवगमात्। तदेति धूमकालोपेक्षित इति
चेन्न क्वचिद्देशेऽन्यदापि धूमस्यावस्थानसम्भवात् कालान्तरस्यापि धूम
कालत्वात्। तद्गतधूमकालोपेक्षित इति चेन्न तच्छब्दस्य व्यक्तिविशेष
वचनत्वेऽप्रतीतव्याप्तिकत्वं यत्किञ्चिद्व्यक्तिवचनत्वे चोक्तदोषापत्तिः हेतोः
पक्षधर्म्मतया व्याप्यपर्व्वतादिधर्म्मः साध्यो माभूत्ततस्तद्वस्तु कालान्तरे किं
न स्यात्। तं कालमन्तर्भाव्य पक्षान्ते कथं पक्षाग्निव्याप्यं प्रवर्त्तते।
धूमकालमन्तर्भाव्य चेदुक्तमावर्त्तते तद्धूमकालच्छेदप्रतः स्ववृत्तिः।

कथं व्याप्तिशब्दार्थ इति वक्तव्यम्। अविनाभाव इति चेन्न किमे-
कस्याव्यतिरेकेऽपरस्य भावोऽविनाभावपदार्थः उत एकस्य व्यतिरेकेऽ
परस्य व्यतिरेकः। यद्याद्यस्तदा व्यतिरेकोऽन्वयार्थ इत्येकस्यान्वयेऽपर-
स्यान्वय इत्युक्तं स्यात्। एवञ्च सति पार्थिवत्वलोहलेख्यत्वयोरन्वयो
व्याप्तिः स्यात्। न व्याप्तिकः सम्बन्धो व्याप्तिः सार्व्वत्रिकस्य तथात्वेन
विवक्षितत्वादिति चेत्। किमिदं सार्व्वत्रिकत्वं सम्बन्धस्य सर्व्वासु

तज्जातीयव्यक्तिषु विद्यमानतेति चेत् । नेयं सर्व्वतज्जातीयव्यक्त्यपरिज्ञाने ग्रहणावधारणा । न च सर्व्वास्ता व्यक्तयो विशेषतो ज्ञातुं शक्याः तत्तज्ज्ञप्तिकारणासम्भवात् इन्द्रियेण सामान्यलक्षणया प्रत्यासत्त्या व्याप्तिग्रहणकाले सर्व्वास्तज्जातीयव्यक्तयो गृह्यन्ते । यदनभ्युपगमे पक्षधर्मानुबाह्य सुखयोः सुखप्रायमिति वाष्पस्य नित्यपातसम्भवादिति चेत् । नैवम् । सामान्यलक्षणया प्रत्यासत्त्या व्याप्तिग्रहणकाले सर्व्वतज्जातीयव्यक्तिग्रहणे प्रमेयत्वादिनापि गृह्णतः सार्व्वज्ञ्यप्रसङ्गात् कश्चिदप्यज्ञानं ते न स्यादिति च सार्व्वज्ञ्यापादनमिति न प्रसक्त्यापि प्रमेयतया सर्व्वं तदा ज्ञायत एव न तु रूपान्तरेणेति चेन्न यदि रूपान्तरेण तत्प्रमेयं तदा रूपान्तरवतोऽपि प्रमेयत्वाधारतया कथमग्रहणम् अथ न प्रमेयं नास्त्येव रूपान्तरेण तत् येन तु रूपेणास्ति तेन सर्व्वथा प्रमेयमिति यावदिद्यमानाकारेण ज्ञातत्वप्रसङ्गः । तथास्वीकारे च ज्ञायतां प्रमेयत्वदर्शिना भवता मामकी चित्तवृत्तिः ततः श्रद्दास्ये । स्यादेतत् यथा भेदोऽन्योन्याभाववैधर्म्म्यादिः पृथक् तथैक्यमपि वस्तूनां ततः प्रमेयत्वाद्यपि धर्म्मिणामेकात्म्यमेव अतः प्रमेयत्वेन ज्ञायमानं तत् सर्व्वमपि तेनैक्येन प्रतीयमानैकव्यक्त्यात्मकमेव ज्ञायमानं भवतीति कथं तदेकात्म्यवेदिनः सार्व्वज्ञ्यम् । अथ वाच्यं नानात्वमपि व्यक्तीनां प्रमेयमिति तदपि धर्म्मितया ग्राह्यमेवेति यतस्तदपि प्रमेयत्वादिना गृह्यमाणमेकमेव गृहीतं भवतीति । तस्मात् "एको भावस्तत्त्वतो येन दृष्टः सर्व्वे भावास्तत्त्वतस्तेन दृष्टा इति ।" तत्त्वतस्तादूप्येण एकीभूता इति । तदेतदपि नोपपन्नं नानैकमिति व्याहतप्रतीत्यापत्तेः । अथ रूपान्तरेण नानात्वम् प्रमेयत्वादिना चैक्यमिति व्यवस्थित्या न व्याघातः स्यात् तर्हि प्रमेयत्वाद्याधारस्य व्यक्तिभेदस्य कृत्स्नस्य ग्रहणात् सार्वज्ञापत्तिस्तादवस्थ्येवेति । किञ्च सामान्यलक्षणया प्रत्यासत्त्या तज्जातीयविशेषग्रहणे तासु सर्व्वासु व्यक्तिषु सम्बन्धावच्छिन्नत्वे किं प्रमाणम् । एवं व्यक्तित्वात्सम्बन्धग्रहेऽपि व्याप्तिग्राहकमिन्द्रियमेव प्रमाणमिति चेत् तर्हि

क्वचिदेवमवधारितस्य यद्यभिचारो दृश्यते तत्र स्यात् इन्द्रियेण तस्य सम्बन्धस्य प्रमितत्वात्। भ्रान्तिस्तत्र सम्बन्धप्रतीतिस्तु पश्चाद्बाधादिति चेन्न सामग्रीभेदे क्वाचित्कभ्रान्तिः क्वाचित्कप्रमितिरिति विभागानुपपत्तेः दोषादोषवैचित्र्यविवेचनस्य च दुष्करत्वात्। कार्यभेदादेव सामग्री भेदोऽप्युन्नेय इति चेत् उन्नीयताम् स एव तु कीदृगुन्नेय इति वाच्यं न तावत्सार्वत्रिकसम्बन्धभावाभावावलक्षणदार्शिभादिनां सम्बन्धानाम-सम्बन्धेनाकारणत्वात्। सामान्यतश्च सजातीययोः सम्बन्धस्य प्रतीतेः पूर्वं सत्त्वं भ्रान्त्यभ्रान्तिसाधारणं क्वचिदपि सम्बन्धाभावे भ्रान्तेरनुत्पादात्। किमेतावता अन्यदेव तर्हि कार्यभेदात्कारणभेदः कल्पयिष्यत इति चेत्। सन्निकृष्टेन्द्रियसहकारिभूतः कारणान्तरमेव वा कल्पनीय इति वाच्यम्। नाद्यः इन्द्रियस्य आविर्भूतसम्बन्धांशे प्रमाणत्वकल्पनायां प्रमाणाभावात् प्रत्युत व्युपरतेन्द्रियव्यापारस्यापि विचारयतः पूर्वप्रतीतसम्बन्धधर्मिद्वयस्य व्याप्त्यवधारणादर्शनात्। तदपि मनोऽतीन्द्रियमिति चेत् अस्तु तस्मिन् कार्ये मनसः कारणत्वे तु प्रमाणाभावः। अवश्य परिकल्पनीयेनान्येनैव सर्वानुपपत्त्युपशान्तेः कारणत्वमात्रम् चक्षुरादि लक्षणानन्यमनस एव स्यात् चक्षुरादिवत्कारणम् अन्यदेव तत्कल्पनीयमिति समममिन्द्रियं प्रमाणान्तरं वा प्रसज्येत। अन्यथा चाक्षुषादि प्रतीतावपि चक्षुरादेः कारणत्वं न स्यात्। उच्यते तत्रापि चक्षुः मन एव तत्र सुखादिप्रतीतिवत्कारणं चक्षुरादयस्तु सहकारिमात्रम्। नापि द्वितीयः इन्द्रियान्तरप्रसङ्गात् प्रमाणान्तरप्रसङ्गाद्वा। नापि विनाभाव एव एतस्य व्यतिरेकाभावस्याव्यतिरेकः सन्निवेशोऽविनाभाव इति द्वितीयः पक्षः। एवं हि लोहलेख्यत्वव्यतिरेकस्य पार्थिवत्वव्यतिरेकस्य क्वचिदस्तीति पार्थिवत्वलोहलेख्यत्वयोरप्यविनाभावः प्रसज्येत। सार्वत्रिकं व्यतिरेकयोगपद्यं विवक्षितं न तु क्वाचित्कम् अत एवोच्यते। अविनाभावनियम इति चेन्न सार्वत्रिकान्वयावधारणाशिष्टन्यायेन सार्वत्रिकव्यतिरेकावधारणस्याप्यशक्यत्वात् अशक्यत्वेनान्यथावधारणमेवा

स्तु सार्वत्रिकं ज्ञातं व्यतिरेकावधारणकुटिलितया । यत्र विपक्षे वृत्तौ बाधकमस्ति तयोरन्वयो व्याप्तिरिति केचित् तत्र यत्तु विपक्षे वृत्तौ बाधकं तत्प्रमाणं वा तर्को वा स्यात् । आद्ये न तावदिन्द्रियं तदसम्भवात् अन्यथा व्यभिचाराव्यभिचारसंशयो न स्यात् नाप्यनुमानम् अनवस्थाप्रसङ्गात् नाप्यर्थापत्तिः अनुमानाव्यतिरेकात् व्यतिरेके तु यदि लिङ्गव्यतिरेकेण लिङ्गस्यानुपपत्तिस्तदा तदेव लिङ्गसिद्धेः ज्ञातमनुमानेन । अनेवम्भावे च तयोः किमायातम् । अस्तु वा कथमपि तावदर्थापत्तिर्बाधिका तथापि कीदृगभ्युपगम इति प्रष्टव्यं किं विपक्षवृत्तिबाधकसध्रीचीना यत्र क्वचिदन्वयव्याप्तिः उत तत्सहितः सार्वत्रिकोऽन्वयः उत क्लिष्टविशेषणवेषणेन तत्सध्रीचीनः सामान्यतोऽन्वयोव्याप्तिः उत सार्वत्रिकान्वयः स च विपक्षे बाधकादवगम्यते । नाद्यः विकल्पानुपपत्तेः तथाहि किं विपक्षे वृत्तौ बाधकं सर्वव्यक्तिविषयम् उत सामान्यविषयम् । आद्ये यत्राप्यनुमानं प्रवर्त्तनीयं तत्रावश्योपस्थाप्यया अन्यथाभावबाधकाभूतयार्थापत्त्यैव साध्यसिद्धेः व्यर्थमनुमानव्यसनेन । द्वितीये क्वचिद्व्यभिचारेऽपि क्वचिदव्यभिचारमाश्रित्य बाधकस्य चरितार्थत्वं धूमवत्त्वमात्रमग्निमत्तामात्रव्यतिरेकीत्येवं रूपो हि सामान्यतो विपक्षपक्षः तत्र च बाधकं तयोरविरोधे पर्यवस्यति । अविरोधश्च क्वचित्साहित्यादुपपत्त्येवेति पार्थिवत्वलोहलेख्यत्वयोरप्येवंभूतव्याप्तत्वप्रसङ्गः । नापि द्वितीयः विशेषणवैयर्थ्यात् । सार्वत्रिकोऽन्वयइत्येवोच्यताम् न च सोऽपि सङ्गत इत्युक्तम् । नापि तृतीयः बाधकस्य सामान्यविशेषविषयताविकल्पेन प्रागुक्तेनैव निरस्तत्वात् । नापि चतुर्थः तथाहि यद्धूमवत्तदग्निमदित्यनेनान्वयस्य सार्वत्रिकत्वं वाच्यं तत्सर्वासां धूमव्यक्तीनामग्निसम्बन्धित्वं तद्यदि व्याप्तिग्रहणकाले गृहीतं तदा पक्षस्यापि धूमवद्व्यक्तेरग्निमत्त्वं प्राक् गृहीतं व्यर्थतरमेवेति गतमनुमानम् । सामान्यतोऽग्निमत्त्वं तस्यापि गृहीतमेव विशेषतस्त्वनुमीयत इति चेन्न विशेषत इति किमग्निमत्त्वस्य विशेषाव्याप्तिरूपो विव-

च्छितः उत कालदेशादिसम्बन्धतस्तस्य । नाद्यः सर्वव्यक्तीनां व्याप्तौ प्रतीतत्वेन भवतैवाङ्गीकारात् । नापि द्वितीयः व्यभिसमङ्गूपतया कृतस्य पक्षीभूतस्य धूमवह्निविशेषस्य चक्षुरादिभिरेव पर्वतत्वादिदेशकालविशेषादिभिस्तथा परिच्छेदात् । यथा प्राक् प्रत्ययाहितसंस्कारसध्रीचीनैश्चक्षुरादिभिः परिच्छिद्यमानेदानींभावदेशयोर्विशेषावस्थानादेः स एवायमिति प्रत्यभिज्ञायमानताङ्गीक्रियते । तथैवाप्यस्तु तत्समनुमानेन । नाप्युपमानं साधकं विपक्षे ग्रवयं वक्तुं तस्य नियतविषयत्वेनेतादृशे विषये उदयात् । नापि शब्दः आप्तस्योपदेष्टुरभावे व्याप्त्यनवगमप्रसङ्गात् । अभावस्तु कादाचित् स्यात् सोऽपि निरूप्यमाणो न घटते एवं स वाच्यो यदि वह्निव्यतिरेके धूमः स्यात्तदा तथोपलभ्येत नचोपलभ्यतेऽतोऽनुपलम्भान्नास्ति तद्व्यतिरेकेणेति । तच्च न तथाहि क्वचिद्व्यभिचारादर्शनाद्वाऽयमभावः प्रवर्त्तते सर्वत्र व्यभिचारादर्शनाद्वा । नाद्यः पार्थिवत्वलोहलेख्यत्वयोरपि व्याप्तत्वप्रसङ्गात् न द्वितीयः सर्वत्र योग्यानुपलम्भो वा अनुपलम्भमात्रं वा वाच्यम् । नाद्यः सर्वत्र योग्यानुपलम्भासम्भवात् । नापि द्वितीयः पार्थिवत्वलोहलेख्यत्वयोरपि सम्भवात् । तत्र वज्र एव व्यभिचार इति चेन्न तदीयादर्शनदशायां व्यभिचारानवगमात् । तद्दर्शनदशायां तावदस्ति व्यभिचारो यत्र तु न कदाचिदपि व्यभिचारदर्शनं तत्र व्याप्तिरिति चेत । अत्रापि व्यभिचारो न द्रष्टव्य इत्यत्रापि नियामकादर्शनात् । नापि विपक्षे बाधकस्तर्को वाच्यः तर्कस्य व्याप्तिमूलत्वाभ्युपगमे अनवस्थाप्रसङ्गात् । तदनभ्युपगमे मूलशैथिल्येन तर्काभासत्वापातात् । अथ ब्रूषे न शक्यमिदं वक्तुं तथा ह्यग्निधूमव्यभिचारशङ्कायां बाधकस्तर्कोऽयमभिधीयते यदि धूमोऽग्निं व्यभिचरेदकारणकः सन्नित्यः स्यात् न स्यादेव वा तच्चायमनुपलम्भकः तत्र शङ्कायां व्याघातापत्तेः । तदेवञ्चाशङ्कते यस्मिन्नाशङ्क्यमाने स्वक्रियाव्याघातादयो दोषा नावतरन्तीति लोकमर्य्यादा एवं सर्वत्रानुसरंस्तर्को बाधकोऽभिधेय इति । नैवम् । किमित्येवं शङ्कितव्यं तद्धेतु

फलतोऽप्येव न भविष्यति । एवन्तु शङ्कितव्यम् अग्निं विहायान्यस्मा-
दपि हेतोरयमुदेष्यतीति । न च वाच्यमेवं हि सति धूमस्यैकजातित्वं
न स्यादिति क्वचिदिन्द्रियजन्यत्वे क्वचिदनुमानादिजन्यत्वेऽपि ज्ञानैक-
जात्यवत्तदुपपत्तेः । तथेन्द्रियादीनामवान्तरसामान्ये साक्षात्कारि-
त्वादौ प्रयोजकत्वं न ज्ञानतायामिति चेन्न ज्ञानत्वस्याकस्मिकत्वपरि-
हारार्थं तत्कारणस्यानुगतस्य भवताऽवश्यं वक्तव्यत्वात् । धूमेऽपि वह्नि-
विशेषस्यैव प्रयोजकत्वस्य तदभ्याप्तुं शक्यत्वात् । न दृश्यते तावदग्नि-
प्रयोज्यो धूमे विशेष इति च न वाच्यम् एवं हि सति तददर्शन-
स्यापातेऽपि हेत्वन्तरप्रयोज्यावान्तरजात्यदर्शनेनायोग्यतया विपक्षत्वा-
दुपपत्तेः । यदा तु हेत्वन्तरप्रयोज्यो धूमस्य विशेषो ज्ञास्यते तदाऽसौ
विकल्पयिष्यत इति सम्भावनाया दुर्निवारत्वात् । अस्मदात्मनो योगोऽनु-
गतं कारणं ज्ञानोत्पत्ताविति चेन्न यथात्मनो योगादुत्पद्यमानं ज्ञानं
स्यादितीच्छादयोऽपि ज्ञानं प्रसज्येरन् । यदि चादृष्टविशेषो वा शक्ति-
भेदो वा कारणत्वजातिर्वा ज्ञानप्रागभावो वा तत्रानुगतं कारणमुच्यते
तदा तदितरत्रापि वह्निव्यभिचारे धूमस्यैकजात्यप्रयोजकतया शक्यत
एव शङ्कितुम् दृष्टे व्यभिचारे युक्तमदृष्टादेरैकजात्यपरिकल्पनमिति
चेत् अस्तु दृष्टे तन्निश्चयः अत्रापि व्यभिचारो न दृश्यत इत्यत्र
नियामकाभावात् शङ्क्यते एवं शङ्कमानस्य भवतो न क्वचिदनुमानं
स्यादिति प्रतिवाद्यात्मानमनुमानादिव्यतिरेकेण बाधादमेव प्रत्युक्त्युप-
पत्त्या स्वयं स्वीकर्त्तव्योऽनुमानेऽप्येतादृशशङ्काक्रमणात् स एव व्याघात
इति चेन्न धूमवदग्नेरपि वह्निकारणविशेषस्यानुमानस्यैवं सति तद-
नुमानत्वप्रसङ्गात् । सामग्रीसाम्येन प्रमाप्रमाणवैचित्र्यानुपपत्तेः ।
साधारणधर्म्मदर्शनविशेषादर्शनादौ सत्यपि शङ्कायाश्चानुदये साम-
ग्र्यां सत्यामपि कार्य्यानुदयात् परप्रतिपत्त्युत्पादनार्थं वचनादिरूपां
प्रतिपत्तिसामग्रीमुत्पादयितुं यतमानस्य भवतोऽपि स्वक्रियाव्याघात

स्तुल्यः। व्याघातस्यैव विशेषत्वात् तद्दर्शनेन शङ्कासामग्र्येव नास्ति प्रत्यक्षे कुतो व्याघातसाम्यमिति चेन्न तद्धि न तावत् व्याहारादिका-रणाज्जायमानमेकत्वं कूटविषयस्य तस्यातिप्रसञ्जकत्वात्। कूटभिन्नः प्रसञ्जकः प्रमितस्यैव स्यादिति चेन्न तस्य तर्कावसरे निरस्यत्वात्। तस्मात्त्वदैतद्व्याघातरूपस्य विशेषस्य दर्शनं शङ्काप्रतिपक्षभूतमुच्यते तत् किं प्रमाणात् कुतश्चिदुपजायमानं वक्तव्यम् तर्काद्वा यदि प्रथमः शङ्काखिलत्वमपि तेनैव प्रमाणेनोपेयं शङ्कायां सत्यां व्याघातात् यदि च शङ्कां विनापि व्याघातः तदा शङ्कमानाशङ्कमानयोर्व्याघातस्य साम्यं सिद्धमेव भवतु शङ्काया अपि तत्प्रमाणं किमेतावता प्रथमोपजातशङ्का सवणस्यावस्थितस्य व्याघातरूपस्य विशेषस्य दर्शनात्तु शङ्कान्तरं नोत्पद्यत इति चेन्न व्याघातसत्ताकाले तदवलम्बनया शङ्कयैव शङ्का-भावव्यभिचारिता तस्याः शङ्काया उपरमे च तदवलम्बिनो व्याघात-रूपस्य विशेषस्याभावात् कः शङ्कान्तरोत्पत्तेर्वारयितेति वक्तव्यं मा भाभूत्तु तदा व्याघातात्मा विशेषस्तदवगमस्तदाहितो वा संस्कार-स्तावदस्ति। विशेषावगमतत्संस्कारौ च शङ्काविरोधिनौ। ननु स्वरू-पेण क्वचिदपि विशेषस्यावस्थानं तथेति चेन्न यावदाश्रयभाविनो विशेषस्य पूर्वस्थितस्य यद्दर्शनं तदाहितो वा संस्कारः तस्य काला-न्तरे तत्प्रतिपक्षसंशयविरोधित्वे अवयविपाकपक्षे कुम्भस्य परमाणु-पाकपक्षे परम्परया तदारम्भकस्य परमाणोः पूर्वं श्यामतया ज्ञातस्य कालान्तरे सम्भावितया तस्य पाकजन्यरूपविशेषवत्तायां संशयो न स्यात्। यदि च शङ्कायां व्याघातस्तदा शङ्काश्रयस्य विशेषरूपस्य व्याघातस्य दर्शनाच्छङ्कायां शङ्कान्तरं माभूत्। यदि तु व्यभिचारा-श्रयस्तदा व्यभिचारः स्यादेव व्याघाताश्रयस्य व्यभिचारस्यापि प्रमि-त्यापत्तेः। अनादिसिद्धव्याप्तिकाले तर्क इति चेन्न तद्बुद्धेः प्रमिति-त्वासिद्धेः शरीरे स्वात्मप्रत्ययस्य तादृशस्याप्रमात्वोपगमात् अनादि-त्वासिद्धेरुभयत्राविशेषात्। नापि यत्र व्यभिचारः शङ्क्यते तदा

व्याघातः स्यादित्येवंरूपात्तर्काद्व्याघातावगमः व्याघातप्रतिपादकस्य तर्कस्य मूलशैथिल्ये तर्काभासत्वापातात् तादृशस्यापि व्याघातोपनायकत्वे व्याघाताप्रतीतेश्च साम्यं प्रथमतरमेव तर्काभासमङ्गवतोऽपि व्याघात उपनेतुम्। अथ तर्कस्य व्याप्तिर्मूलमभ्युपगम्यते तत्रापि व्यभिचारशङ्कायां पुनरनवस्थैव तत्रापि व्याघातापादने पुनरित्यमनवस्थैव। एतस्मादस्माभिरप्यस्मिन्नर्थे न खलु दुष्पाठा। त्वद्गाथैवान्यथाकारमक्षराणि कियन्त्यपि। व्याघातो यदि शङ्कास्ति न चेच्छङ्का ततस्तराम्। व्याघातावधिराशङ्का तर्कः शङ्कावधिः कुतः ॥" अव्यभिचारं चैकपदित्यागव्यवच्छेदेनापरान्वयः समकालदृष्टे नष्टेऽदृष्टः शङ्क्यत इत्याहुः।

स्वाभाविकः सम्बन्धो व्याप्तिरित्यपरः। स प्रष्टव्यः कस्य स्वाभाविकः किं सम्बन्धिन उतान्यस्य। न चरमः वैपरीत्यापत्तेः। आद्ये कः स्वाभाविकशब्दार्थ इति प्रष्टव्यं किं सम्बन्धिस्वभावाश्रितः अथ सम्बन्धिस्वभावजन्यः अथ सम्बन्धित्वविवक्षितस्वभावातिरिक्तः अथवा सम्बन्धिस्वभावव्याप्यः अथवा सम्बन्धिस्वभावादन्येन न प्रयुक्तः उतान्य एव कश्चिद्विवक्षितः। आद्ये पार्थिवत्वलोहलेख्यत्वयोरपि व्याप्तत्वप्रसङ्गः। न द्वितीयः अतिव्याप्तेरव्याप्तेश्च अतएव न तृतीयः। नापि चतुर्थः व्याप्त्यनिरुक्तौ व्याप्यत्वनिरुक्तेः। सम्बन्धस्य व्याप्यत्वे च सम्बन्धिनोर्व्यापकयोः सम्भावितसम्बन्धाधिकदेशकालतया एकसम्बन्धिदर्शने ऽपरानुमानाय नियामकाभावात्। नापि पञ्चमः न प्रयुक्त इति यदि न जनितस्तदा सम्बन्धस्याकृतकत्वपक्षे ऽन्येनेति विशेषणवैयर्थ्यमकृतकस्य सम्बन्धिस्वभावेनाजनितत्वात्। सम्बन्धस्य कृतकत्वपक्षे स्वरूपासिद्धिरेव स्यात्। सामग्र्याः सर्वसम्भवादन्ततः कालदेशादृष्टादिभिरपि तज्जन्यत्वस्यावश्यवक्तव्यत्वात्। नापि षष्ठः पक्षः तस्य निर्वक्तुमशक्यत्वात्। एवमेव विकल्पग्रासं चरमविकल्पः सर्वोऽप्यन्यस्य दूष्यो न्यूनत्वशङ्काशमनादिति।

अनौपाधिकः सम्बन्धो व्याप्तिरित्यपरः। स प्रष्टव्यः कोऽयमुपा-

र्धिर्नाम यच्छून्यत्वमनौपाधिकत्वम् उपाधिः साध्यव्यापकत्वे सति सा-
धनाव्यापकः । अयञ्च “एकसाध्याविनाभावे मिथः सम्बन्धशून्ययोः ।
साध्याभावाविनाभावी स उपाधिर्यदत्ययः ॥” इत्यस्य व्यतिरेकमुखस्य
यदत्ययः स उपाधिरिति योऽन्वयमानस्य पर्यवसितोऽर्थः । तद्धर्मभूता
हि व्याप्तिर्जवाकुसुमरक्ततेव स्फाटिके साधनाभिमते चकास्तीत्युपाधि
रसावुच्यते तदिदमाहुः । “अन्यो परप्रयुक्तानां व्याप्तीनामुपजीवकाः ।
तैर्दृष्टैरपि नैवेष्टा व्यापकांशावधारणा ॥” स चोपाधिर्निश्चितइवा
शङ्कितश्च यथेदमुच्यते । “यावत्साध्यव्यतिरेकित्वं पक्षांशेनापि शङ्क्यते
विपक्षस्य कुतस्तावद्धेतोर्गमनिकाबलम्” मिति चेन्न साध्यव्यापके पक्षे
तत्त्वेऽपि प्रसङ्गात् । तद्व्यतिरिक्तत्वमपीति चेन्न बाधोन्नीतस्य तस्या
व्यापनात् अन्यथा निरुपाधिसम्बन्धित्वे बाधासिद्धेः । यदाह बाधेन
वोपाधिरुन्नीयते अन्येन वेति न कश्चिद्विशेषः । एतदर्थमपि विशेष-
णीयमिति चेन्न तथापि साधनाव्यापकत्वे सतीति तद्व्याप्त्यनवधारणे
न शक्यावधारणम् एवं साध्यव्यापकइत्यपि । अथ मन्यसे अदृष्टव्यभि
चारसाध्यत्वं साध्यव्यापकत्वं न वस्तुगत्या व्यभिचारिसाध्यस्याप्यापा-
ततोऽदृष्टव्यभिचारसाध्यत्वसम्भवात् तस्याप्युपाधित्वापत्तेः । न च स्वत
इति च निरूपयितुमशक्यम् । व्याप्तिग्रहकाले च साध्यत्वाभावेन तद
व्यभिचारः कथमवधार्यः साध्यं व्यापकमपेक्षितमिति चेन्न व्याप्त्यनव
गमे व्यापकार्थानवगमात् । सम्भावितव्यापकभावो व्यापकोऽपेक्षितइति
चेन्न व्यापकस्यानिरुक्तौ किं रूपतया सम्भावनापि स्यात् । अथ साध्य
व्यापकइत्येव भद्रं तदानीं साध्यत्वाभावेऽपि साधयितुमर्हत्वस्य विव-
क्षितत्वात् न कथं त्ववगन्तव्यमिदमेव साधयितुमर्हमिदं नेति व्यापक
त्वादिति वक्तुमशक्यत्वात् । नच साधनाव्यापकत्वं सर्वत्र निश्चेतुं
शक्यम् स श्यामो मैत्रतनयत्वादित्यत्र शाकाद्याहारपरिणतिपरम्परा-
या मैत्रतनयेऽभावस्य दुरधिगमत्वात् । यत्रोक्तलक्षणस्य निश्चायकं
प्रमाणमस्ति तत्र निश्चितोपाधित्वम् अन्यत्र शङ्कितोपाधित्वं मैत्र

तनयत्वव्याप्यशाकाद्याहारपरिणतिपरम्परया श्यामत्वमित्यत्र निया-
मकाभावादिति चेन्न मैत्रतनयत्वेनैव हेतुना तस्यापि प्रसाधने तच्छ-
ङ्काया अपि कर्त्तुं शक्यत्वात् । तत्रापि तत्तत्सामग्रीत्युपाधिपरम्परा-
भिधाने च तस्याः तस्या अपि मैत्रतनयत्वेनैव साधनस्य कर्त्तुं शक्य-
त्वात् । अनवस्थैवं स्यादिति चेन्न उपाध्युपन्यासस्य कुतोऽनवस्था न
स्यात् साध्यसामग्र्या उपाधित्वे धूमानुमानसाधारण्यात् । एवञ्च साध्य
सामग्र्युपाधित्वव्यवच्छेदार्थमपि लक्षणे विशेषणीयं श्यामत्वादौ साध्ये
शाकाद्याहारपरिणतिपारम्पर्य्यादि स्वस्मिन् साध्ये श्यामत्वादिरुपाधि-
त्वसम्भवेन कथमुपाधिरपि साधयितुं शक्यत इति चेत् नैवम् प्रत्येकं
द्वयोरपि मैत्रतनयत्वादिना साधने साधनाव्यापकत्वस्य शङ्कितुमशक्य
त्वात् । अन्यथा सकर्त्तृकत्वे साध्ये अदृष्टाजन्यत्वम् अदृष्टजन्यत्वे च
सकर्त्तृकत्वमुपाधिरित्युभयासिद्धिः स्यादेवं बुद्धिमत्पूर्वकत्वे प्रयत्नवत्पूर्व
कत्वं प्रयत्नवत्पूर्वकत्वे च बुद्धिमत्पूर्वकत्वमेवं वह्नित्वजात्याक्रान्तत्वेऽ
पीन्धनजन्यतेजोवत्त्वं तस्मिन् वह्नित्वजात्याक्रान्तत्वमुपाधिः स्यादि
त्यादि विश्वमनुमानव्याकुलं स्यात् । अतएव साध्यसाधनसम्बन्धं प्रति
व्यापकत्वं साध्यव्यापकत्वमित्यपि प्रत्युक्तम् । यत्राप्युपाधिर्निश्चीयते
तत्राप्यतीन्द्रियोपाधिविषये तदभावस्य साधनाव्याप्यत्वमनुमेयतायां
सोपाधीक्रियमाणेन साधनेनैव सत्प्रतिपक्षस्य कर्त्तुं शक्यत्वात् । तथा
सति तत्र शङ्कितोपाधित्वमेव निर्व्यूढं स्यास्यतीति चेत् । एवं प्रयासो
नियतमजेयोः परं मन्दमन्दानां न प्रतिपत्त्यै तथाहि स्वीकृतनिश्चितो
पाधिभाव आशङ्कितोपाधिकत्वमपि तदनुकूलं मन्यते कोऽन्यो शितख-
ज्ञात् । नच क्वचिन्निश्चितोपाध्यनभ्युपगमे तच्छङ्का शक्या यत्र प्रत्यक्षे-
णोपाधिनिश्चयस्तदेव तद्दर्शनस्थानं भविष्यतीति चेन्न येन्द्रियकबाधे त-
ज्जातीयस्यातीन्द्रियस्याप्रयोजकीक्रियमाणेन हेतुनैव साधयितुं शक्य
त्वात् । नच यदेकमेकजातीयमैन्द्रियकं तदन्यमैन्द्रियकबाधे हेतुबला
दतीन्द्रियं न प्रसाध्येत शाकदर्शनात् जठरानलादि साधनाव्यापकत्वे

सति साध्यव्यापकत्वमिति च प्राकाश्यादावपरिच्छिन्नपरस्परासाध्यं न व्याप्नो-
तीत्यव्यापकत्वदोषः । नहि प्राकाश्यादित्वं नाम किञ्चिदेकमस्ति यत्साध्यं
व्याप्नुयात् । अस्तु वा कथमपि तथापि श्यामत्वं न व्याप्नोति इन्द्र-
नीलमणिप्रभादिश्यामत्वस्याहाराजन्यत्वात् । शरीरश्यामत्वं साध्यं तच्च
व्याप्नोत्येवेदमिति चेन्न व्याप्तावुपाधेरभिधेयत्वात् अत्र पुत्रत्वश्याम-
त्वेन व्याप्तिः । हेतुपक्षधर्मतैव हि साध्यं पक्षधर्मः सिद्धमिति न
व्याप्तता । अन्यथा पुत्रत्वपदस्याव्यवच्छेदकस्याविशेषणत्वापातात् । पर-
म्परासम्बन्धिशब्दाद्याविषयश्यामत्वव्यवच्छेदकत्वे च संयुक्तश्यामपुरुष-
समवेतश्यामत्वस्य परम्परासम्बन्धिनः कथं व्यवच्छेदः स्यात् । नच
साध्यसाधनसम्बन्धाद्व्यभिचारित्वं साध्यव्यापकत्वं मा रूपसाक्षात्-
कृतिकरणादेरौज्ज्वल्यादित्वे साध्ये भूदुद्भूतरूपवत्त्वादेरुपाधित्वम् ।
साधनेनापि च विशेषणतया निवेश्येन यदि केवलसाध्यव्यापकं व्यव-
च्छेद्यं तदा तस्य व्यभिचारे शङ्काधानक्षमस्याप्युपाधित्वं न स्यात् ।
अथ न किञ्चिद्व्यवच्छेद्यं तदा विशेषणत्वासिद्धिरेव । नहि प्रयोजन-
नाशविशेषणमर्थवद्भवति किन्तु किञ्चिद्व्यवच्छेदादिति अन्यथा शरी-
रजन्यत्वमिवाकार्यत्वे व्यक्तमसिद्धौ पर्यवस्येदिति । किञ्च आभासे
व्यतिरेकिणि पक्षधर्मे हेतौ जीवच्छरीरं पृथिव्याद्यष्टद्रव्यातिरिक्ता-
त्मवन्नित्यवत् प्राणादिमत्त्वादित्यादौ कथमिदमुपाधिलक्षणं व्यव-
स्थाप्यं नह्याभासे व्यतिरेक्यनुमानात्मनि यत्साध्यं तदुपाधिना व्याप्त-
मिष्यते तस्य पराभिमतस्य क्वचित् सिद्ध्यापत्तेः । व्यतिरेकव्याप्त्यु-
पाधिश्चेत् तर्हि व्यतिरेके यद्व्याप्यं तस्य व्याप्यउपाधिरवश्यं मन्तव्यो
ऽन्ययोपाधेरन्वये साध्यान्वयापत्तिरित्युपाधेर्व्यतिरेकव्याप्तत्वमवश्यम्भाव-
स्याभ्युपगम्यतया उपाधेर्यद्व्यापकं तद्व्यतिरेक उपाधिव्यतिरेकस्य व्या-
प्यतया मन्तव्य इति परसाध्यापत्तिः । असमव्याप्तिकयोरन्वयव्याप्ति-
साध्यसाधनभाववैपरीत्येन व्यतिरेकव्याप्तिरिति । नच दोषान्तरमेव
तर्हि वाच्यमिति वाच्यं हेतोः पक्षधर्मत्वस्थितौ व्याप्तिद्वलार्थं तयोपा-

भ्युपगमध्रौव्यात्। भवतु वा या काचिद्व्याप्तिर्नाम तत्स्वरूपस्यानुमिति-भावात् तस्यास्त्वनुमितेश्च व्याप्तिरेकैव ततश्चात्माश्रयः। तद्भेदे वा-ननुगमाविनिगमनौ स्यातामिति व्याप्तिपक्षधर्म्मते अनुमितिं भावयत इति वदन्ति।

तत्र केयं पक्षधर्म्मता। पक्षाश्रिततेति चेन्न नैयायिकादीन् प्रति प्रमेयत्वस्यापि हेतुत्वप्रसङ्गात् विषयविषयिभावस्य ज्ञेयज्ञानस्वरूपाति-रिक्तस्यानङ्गीकारात् तयोश्च ज्ञेयाश्रितत्वायोगात्। अथायं पक्षो नाम यद्धर्म्मत्वं पक्षधर्म्मत्वं सिषाधयिषितधर्म्मा धर्म्मीति चेन्न सिषाध-यिषा हि प्रतिपिपादयिषा वा स्यात् प्रतिपित्सा वा। आद्ये स्वार्था-नुमित्यनुदयप्रसङ्गः। द्वितीये वासुरभिगन्धानुमेयकुसुमतरुस्वविषय स्वार्थानुमित्यनुदयप्रसङ्गः। न चानवधारितधर्म्मा धर्म्मी पक्षः हेतु-मन्यथा ह्यनवधारणेऽनुमानोदयनिदानभावासम्भवात्। अवधारणे चानवधारितधर्म्मत्वानुपपत्तेः। न चानवधारितहेतुविषयधर्म्मा धर्म्मी पक्षः। तथाहि केनानवधारितधर्म्मा न तावदनुमानप्रयोक्त्रा स्वय-मज्ञाते परं प्रत्यप्रयोगात्। प्रतिवादिनेति चेन्न प्रतिवादिविदिते-ऽप्यर्थे वादितया परस्परविप्रतिपत्त्या प्रकर्षनिरूपणार्थमनुमानदर्शनात्। तथानवधारणं धर्म्मिणि हेतुविषयधर्म्मगोचरं वादिप्रयोक्तव्यहेतु-विषयगोचरं वा। न तावदाद्यः कश्चिमरस्वनिश्चयदशायामपि तत्त-द्धेतुविषयवह्न्यलङ्कारापरापरधर्म्मानवधारणात् धूमं प्रति पर्व्वतस्य पक्ष-धर्म्मत्वप्रसङ्गात्। न द्वितीयः तथापि तत्र प्रसङ्गात् तद्धेतूनामपि वादिप्रयोज्यत्वात् असाधारणविवक्षायाञ्चाननुगमात् इतरेतराश्रय-दोषाच्च। पक्षधर्म्मत्वेन हेतुत्वनिरूपणात् व्याप्तपक्षधर्म्मत्वस्य हेतु-त्वात् हेतुना च पक्षनिरूपणात् स्वार्थानुमाने च हेतोरप्रयोज्यत्वात् पक्षाभावेनानुमानानुदयप्रसङ्गात् विरुद्धहेतौ च पक्षत्वासम्भवप्रस-ङ्गात् तत्र साध्यस्य तद्धेतुविषयत्वाभावात् हेतोरेव च साध्यविपरीत-व्याप्त्या दुष्टत्वात्। एतेन सन्दिग्धसाध्यधर्म्मा धर्म्मी पक्षः साध्यत्वञ्च

स्वपरार्थानुमानसाधारणमुत्पाद्यज्ञानत्वमिति निरस्तम् प्रतीति व्याप्ति ग्रहणेन सामान्यतो व्यापकत्वग्राहकप्रत्यक्षं विशेषमादाय परं पर्य्यवसाययितुं व्याप्यतामर्थ्यं सेति चेन्न तस्याः सामान्यविषयाया अनुपपत्तेरसिद्धेः व्याप्तिवदसम्भवात् अनुपपत्तित्वे व्याप्त्यनुप्रवेशात् अधिकविषयाकाङ्क्षित्वे विरम्यव्यापारापत्तेः ज्ञानान्तरत्वापत्तेर्वा। विशेषविषयायाश्चानुपपत्तित्वेऽतिप्रसङ्गात्। पक्षधर्म्मतया च यदि साध्यव्यक्तिभेदः सिद्ध्येत् तर्ह्यनुमाय तां प्रत्यक्षेण पश्य न संशयात् पुरुषानुमायी प्रत्यक्षेण पुरुषद्वयदर्शने तद्विशेषसंशयी स्यात्। प्राग्विशेषादर्शनात्तथा स्यादिति चेन्न पश्चात्तत्र तद्दर्शित्वान्न संशयीति।

उपमानमपि निरुच्यते। सादृश्यज्ञानमुपमानमित्येके तन्न स्मृतावपि प्रसङ्गात्। अनुभव इत्यभिधाने च सादृश्यविषयातीन्द्रियकेऽपि प्रसङ्गात्। सोऽपि गवयो गवा सदृशो गवयत्वात् गवयान्तरवदित्यनुमानस्यापि तत्त्वापत्तेः। एवमातिदेशिकेऽपि। किञ्चोपमितिलक्षणमिदमुपमितिकरणलक्षणं वा स्यात्। नाद्यः सादृश्यस्योपमेयत्वापत्तेः। सदृशे चोपमेयव्यवहारोऽस्ति चन्द्रोपमेयं मुखमित्यादि सदृशमितिः सेति चेन्न करणादिकरणसम्भवे तदुदाहरणासिद्धेः। नापि द्वितीयः सादृश्यज्ञानस्य सर्व्वस्यासम्भवात् प्रमाणान्तरवत्प्रमाणान्तरव्यापारफलजनकतया दर्शयितुमशक्यत्वात्। नच सादृश्यमनुगतमस्ति मुखसादृश्यस्य चन्द्रसादृश्यस्य च भेदेनैवोपलम्भात्। नच सादृश्यत्वमनुगतं तेनान्वयीत्यदोषः। तथापि सादृश्येन सह सादृश्येऽनेकस्वत्वादौ सादृश्यरूपत्वाश्रिते सादृश्यरूपत्वस्याश्रयाभ्युपगमे परस्पराश्रयभवोऽनभ्युपगमे वाननुगमः। तयोः सादृश्यानभ्युपगमे वान्यव्यापि तथापत्तिः। किञ्च वैधर्म्यप्रतीतेरपि प्रमाणान्तरत्वमेवं स्यादविशेषात्। एवमेवाभ्युपगमे च परिगणितप्रमाणाधिक्यप्रसङ्गः। वा सादृश्यबुद्धेरपि वा परिगणितेष्वेवान्तर्भावः स्यादिति। अप्रतीयमानस्य प्रतीयमानेन सह सादृश्यप्रमितिरुपमानमित्यपि न व्याप्त-

वाक्यादपि तथाप्रमितेः । यत्र तद्व्यापारो नास्तीति चेन्न सचायञ्च अभिज्ञायामिव सचायञ्च सदृशाविति पूर्वप्रतीतस्य प्रतीयमानेन सह वैन्द्रियकसादृश्यप्रतीतावपि प्रसङ्गात् । इन्द्रियासम्प्रयुक्तस्येति चेन्न प्रत्यक्षतो गोगवयसादृश्यं प्रतीत्य सापि च गौ गवयेन सदृशी गोत्वादियमिवेत्यनुमितावपि प्रसङ्गात् । अलिङ्गजायामिति चेन्न नन्वेवं प्रत्यक्षानुमानशब्दानुत्पत्तौ सत्यामुक्तं स्यात् । तथा च विशेषणमेव समर्थमित्यप्रतीयमानस्येत्यादि व्यर्थम् । नोपादेयमेव पदान्तरमिति चेन्न अर्थापत्तेरवश्यं सम्भवात् तेन सार्द्धमेतत्सादृश्यस्यानेन सार्द्धं तत्सादृश्यव्यतिरेकेणानुपपद्यमानत्वात् । अन्यथा अन्यथाप्रत्ययोत्पत्ति विषयं प्रमाणान्तरमापद्येत । तस्मादयं ह्रस्व इति प्रतीते अस्मात् स दीर्घ इति चान्यथा कतमा प्रमा स्यात् । अर्थापत्तिं प्रमाणान्तरमनिच्छतापीयमर्थापत्तिरनुमानेऽन्तर्भाव्या पृथक्प्रमाणीकर्त्तव्या वा । एतेन प्रतीतगवयगवान्तरसामान्यसादृश्यानुमानासम्भवात् गवयेनानेन सदृशी सा गौरितिविमितिरुपमितिरित्यपि व्युदस्तम् । तयैतत्सादृश्यस्यैतेन तत्सादृश्यं विनानुपपत्त्यैव सिद्धेरिति । अनवगतसङ्गतिसंज्ञासमभिव्याहृतवाक्यार्थस्य संज्ञिन्यनुसन्धानमुपमानमित्यपि न प्रकृतसङ्गतेरेवम्भूतोपमित्यव्यापनात् । अकृतसङ्गतीत्यभिधेयमिति चेन्न अनुभूतकालान्तरप्रस्मृतसङ्गतेरव्यापनात् । अस्मर्य्यमाण इति चेन्न कदाचिदस्मर्य्यमाणतया स्मृत्यापि सम्भवात् सर्वदा अस्मर्य्यमाणतायाः क्वचिदप्यसम्भवात् । उपमितिप्राक्काल इति चेत्स्यादेवैतद्यद्युपमितिर्लक्षिता स्यात् तदर्थमेव तु क्रन्दनमिदम्भवतः । किञ्च सर्व्वैरनवगतसङ्गतित्वस्य प्रमातेऽप्यसिद्धेः केनाप्यनवगतसङ्गतित्वस्य वाक्यजेऽपि सम्भवात् उपमानेति च पूर्व्वनिरस्तम् । यस्याः प्रमितेर्येन प्रमाणेनेति साभिधाने अनुगतरूपाभावात् व्यक्तौ पतनेन लक्षणेऽननुगत्यापत्तेः । संज्ञेत्यप्याकुलं गोसदृशो गवयः प्रायः कानने वसति इत्यवगतेति श्रुतवाक्यस्य काननपदाविदितसङ्गतेर्गवयपदविदितसङ्गतेश्चासंज्ञासंज्ञि